# परिचयः

- संस्कृतभाषायां पद्यस्य इव गद्यस्यापि तुल्यं प्राधान्यं वर्तते ।
- रघुवंशादिपद्यकाव्यानि यथा गौरवार्हाणि तथा कादम्बर्यादि गद्यकाव्यान्यपि समं मान्यानि भवन्ति ।
- अपि च 'गद्यं कवीनां निकषं वदन्ति' इत्युक्तिः गद्ये आदरातिशयम् अभिव्यञ्जयति ।
- भाववैशिष्ट्यं, कल्पनावैचित्र्यं, प्रौढा शैली, सरसं वस्तु, शब्दसौष्ठवं, भावसौन्दर्यञ्च गद्यकाव्ये सहृदयाह्लादकारित्वं गुणं प्रथयति ।

# गद्यकाव्यलक्षणम्

**अपादः पदसन्तानो गद्यम्।**

अपादः नाम चरणानिबद्धः । तस्य पदसमूहः एव गद्यम् ।

**स्वरूपरीत्या (structure based) विषयरीत्या (content based) गद्यकाव्यं विभज्यते ।**

# स्वरूपरीत्या गद्यकाव्यभेदाः

वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ॥

1. मुक्तकम् - समासरहितं गद्यं मुक्तकम् उच्यते ।
2. वृत्तगन्धि - यत्र गद्ये वृत्तलक्षणवन्तो पादा लक्ष्यन्ते तद् वृत्तगन्धि ।
3. उत्कलिकाप्रायम् - समासभूयिष्ठं गद्यम् उत्कलिकाप्रायम् ।
4. चूर्णम् अथवा चूर्णकम् - अल्पसमासशोभितं गद्यं चूर्णकम् । अत्र समासाभावो वा, दीर्घसमासता वा न भवेत् ।

# विषयरीत्या गद्यकाव्यस्य भेदाः

**गद्यम् आख्यायिका कथा इति तस्य प्रभेदौ द्वौ ।**

Contd………….

# (i) कथा

‘कल्पनाप्रधानकाव्यं कथासाहित्यम्’ इत्युच्यते ।

- पद्यविरहितं च गद्यम् इदम् ।
- कविकल्पिता कथायाः वक्ता नायकः स्वयम् अन्यो वा भवति ।
- उच्छ्वासादिविभाजनाभावः, अवान्तरविभागरहितं च भवति ।
- भाषा संस्कृतं वा प्राकृतं वा भवेत् ।

यथा - कादम्बरी, दशकुमारचरितम्, अवन्तीसुन्दरीकथा, वासवदत्ता, इत्यादयः प्रमुखाः ग्रन्थाः ।

## (ii) आख्यायिका

## इतिहासप्रधानकाव्यम् आख्यायिका इत्युच्यते ।

- ऐतिहासिककथासम्बद्धा भवति इयम् ।
- अस्यां नायकः स्वकीयवृत्तान्तं चेष्टादिकं च स्वयम् आख्याति ।
- उच्छ्वासादिषु विभक्ता ।
- संस्कृतनिष्ठा, स्वल्पपद्यान्विता च भवति ।

यथा - हर्षचरितम्, शिवराजविजयम्, इत्यादयः प्रमुखाः ग्रन्थाः ।

